CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

॥ श्रीः ॥

# श्रीमारुतिस्तवः ।

योधपुरवास्तव्य–दाधिमथ ( दाहिमा ) कासल्योपाख्य-धीरधुरीण-श्रीमाधवात्मजाऽऽशुकवि पं० नित्यानन्द-शास्त्रिणा विरचितः

ग्रन्थकर्तृज्येष्ठसोदरेण योधपुरीयश्रीवैदिकपाठालयप्रथमाध्यापकेन पण्डितवर-श्रीभगवतीलालेन प्रणीतया तात्पर्यदर्शिन्या व्याख्यया भूषितः,

तेनैव च संशोधितः ।

स च

खेमराज श्रीकृष्णदासश्रेष्ठिना

मुम्बय्यां

स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्–यन्त्रालये

मुद्रयित्वा प्रकाशितः ।

संवत् १९६४, सन् १९०७.

सर्वाधिकार "श्रीवेङ्कटेश्वर" यन्त्रालयाध्यक्षने स्वाधीन रक्खा है.

२८८

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

॥ श्रीः ॥

# श्रीमारुतिस्तवः ।

योधपुरवास्तव्य-दाधिमथ (दाहिमा) कासल्यो-
पाख्यधौरिधुरीण श्रीमाधवात्मजाऽऽशुकवि
पं० नित्यानन्दशास्त्रिणा विरचितः

ग्रन्थकर्तृज्येष्ठसोदरेण योधपुरीयश्रीवैदिकपा-
ठालयप्रथमाध्यापकेन पण्डितवर श्रीभगव-
तीलालेन प्रणीतया तात्पर्यदर्शिन्या
व्याख्यया भूषितः,
तेनैव च संशोधितः ।

स च
खेमराज श्रीकृष्णदासश्रेष्ठिना
मुम्बय्यां
स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-यन्त्रालये
मुद्रयित्वा प्रकाशितः ।

संवत् १९६४, शके १८२९.

सर्वाधिकार "श्रीवेङ्कटेश्वर" यन्त्रालयाध्यक्षने
स्वाधीन रक्खा है.

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

॥ श्रीः ॥

# भूमिका ।



गजवदनं शुभसदनं तमेकरदनं भजे मनोमदनम् ॥
सदनन्तमपि जडत्वं यत्कृपया याति कदनं द्राक् ॥ १ ॥
अस्मिन् भारतवर्षे पुष्करतः पश्चिमां दिशं व्याप्य ॥
मरुदेशे **योधपुरं** पुरं जिताऽमरपुरं लसति ॥ २ ॥
यत्र प्रजाः प्रजा इव निजाः पितेवाऽतिपालयन् परमम् ॥
**सरदारसिंह** भूपोऽधुना सुनासीरवज्जयति ॥ ३ ॥
**पण्डितवरसुखदेवप्रसादशर्मा** महत्तराऽमात्यः ॥
योग्यो यत्र विराजति राजतिरोभूतनयसमुद्धर्त्ता ॥ ४ ॥
तत्र हि शिक्षाभागप्रभुणा **सूर्यप्रकाशेन** ॥
निरविद्यातिमिरे सति वैदिकपाठालये मम ज्येष्ठः ॥ ५ ॥
आगमदध्यापयितुं जयपुरतः **सूरिभगवतीलालः** ॥
तस्माद्गुरोरहमिहाऽधीत्य विशारदपरीक्षाऽन्तम् ॥ ६ ॥
तस्य च कृपया तत्रोत्तीर्णेषु प्रथमतामापम् ॥
अत एव विश्वविद्या[1]-चिरत्नविद्यालयाऽधिपाऽऽहूतः ॥ ७ ॥
लवपुरनगरं गत्वा तद्द्विस्थाना[2]ऽधिकारिमुख्याच्च ॥
अपठं महामहोपा-ध्यायाच्च**शिवदत्त**तःपितृसतीर्थ्यात् ८॥

---

१ विश्वविद्यालयस्य 'University of Lahore' इति विख्यातस्य तथा चिरत्नविद्यालयस्य 'Oriental College' इति प्रथितस्याऽधिपेनाऽध्यक्षेण "A. C. Woolner. M. A." इति संज्ञकेनाऽऽहूत इति भावः ।

२ विश्वविद्यालयः प्राच्यविद्यालयश्चेति स्थानद्वयं तत्र मुख्याधिकारिणः॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


तत्कृपयाऽऽशुकविपदं गतश्च सूत्तीर्य शास्त्रिसुपरीक्षाम् ॥
तत एत्य च योधपुरं स्तोत्रमिदं व्यरचयं भक्त्या ॥ ९ ॥
प्रथितस्वपाठशालान्सशोधनं विवृतपदजालान् ॥
धृतमदुपकारमालान्वन्दे गुरुभगवतीलालान् ॥ १० ॥

किञ्च-

बालस्य पदन्यासो सद्यो मे प्राप्तकवियोनेः ॥
स्खलितत्वादियुतोऽपि प्रमोदयिष्यति महन्मनो मन्ये ११॥

इति विज्ञापयति.
विद्वच्चरणानुचरो,
नित्यानन्दशास्त्री.



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

॥ श्रीमत रामाय नमः ॥



# एतत्स्तवीयपद्यैकैकपादप्रथमाऽक्षरैरुच्चार्यमाणा रामरक्षास्तोत्रीया एते श्लोकाः-

शिरो मे राघवः पातु भालं दशरथात्मजः ।
कौशल्येयो दृशौ पातु विश्वामित्रप्रियः श्रुती ॥ १ ॥
घ्राणं पातु मखत्राता मुखं सौमित्रिवत्सलः ।
जिह्वां विद्यानिधिः पातु कंठं भरतवंदितः ॥ २ ॥
स्कंधौ दिव्यायुधः पातु भुजौ भग्नेशकार्मुकः ।
करौ सीतापतिः पातु हृदयं जामदग्न्यजित् ॥ ३ ॥
मध्यं पातु खरध्वंसी नाभिं जाम्बवदाश्रयः ।
सुग्रीवेशः कटी पातु सक्थिनी हनुमत्प्रभुः ॥ ४ ॥
ऊरू रघूत्तमः पातु रक्षःकुलविनाशकृत् ।
जानुनी सेतुकृत् पातु जंघे दशमुखान्तकः ॥ ५ ॥
पादौ विभीषणश्रीदः पातु रामोऽखिलं वपुः ।

इति शम् ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

॥ श्रीः ॥

# अथ श्रीमारुतिस्तवः ।

## ॥ श्रीगणेशाय नमः ॥

मङ्गलाचरणम् ।

राजतेजउपमे विराजते याऽऽसने महति राजतेऽत्र सा ।
सर्वदानवकदध्नि सर्वदा सर्वदा दधिमथी मथीनतात् ॥ १ ॥
सहंसका हंसगतिप्रवीणा वीणामुपादाय निजां स्वपाणौ ।
सरस्वती सा मम चित्तरङ्गेऽरं गेयमारभ्य नटीव नृत्यात् ॥ २ ॥
माधवनन्दननित्यानन्दनतो नन्दनन्दनो नन्द्यात् ।
स्वपदारविन्दनन्दितमिन्दिन्दिरमिन्दिरेश ! चाऽऽनन्द्यात् ॥ ३ ॥

नत्वा प्राक्तु गणेशपादयुगलं प्रत्यूहनिर्णाशकं
पश्चात्स्वं पितरं च मुक्तिलहरीपीयूषपानप्रदम् ॥
स्मृत्वा धीरधुरंधरं निजगुरुं श्रीमाधवं मानसे
शिष्यप्रार्थनयाऽऽदधे भगवतीलालोत्र टीकामहम् ॥१॥

प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नसमाप्त्यर्थं पूर्वं पद्यत्रयेण मङ्गलमाचरति—राजेति ॥ याऽत्र भुवि राजतेजउपमे चन्द्रकान्तितुल्ये राजते रूप्यमये आसने राजते शोभते सा सर्वं ददाति तथोक्ता दधिमथी स्वकुलदेवी सर्वदानवानां समूह एव दधि तास्मिन् सर्वदा सदा मथीनतान् मन्था इवाऽऽचरतात् दानवान्मथ्नीतादिति भावः ॥ १ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

सहंसकेति ॥ सहंसका समरालवाहना सपादकटका च सरस्वती चित्तरङ्गे मानसनाट्यशालायां नटीव नृत्यादन्यत्स्पष्टम् ॥ २ ॥

माधवेति ॥ धीरधुर्यस्य माधवस्य नंदनेन पुत्रेण नित्यानन्देन नतो वन्दितो नन्दनन्दनो गोविन्दोनन्द्यात् प्रसीदतात् च पुनरिन्दिरेश ! रमापते ! स्वे पदकमले नन्दितं रतं इन्दिन्दिरं भ्रमरं मद्रूपमिति भावः। आनन्द्यात्प्रसादयतात् ३॥

शिञ्जानमञ्जुमुकुटैः सुकुटैरिवोच्चै
रोचिर्भिरद्भिरिव रुद्धतराऽन्तरालैः ।
मध्यैः सुरैः पदयुगं बहु सिच्यमानं
रामाऽनुगस्य विनुमो द्युतरूपमानम् ॥ १ ॥

अथ स्तवप्रारम्भः—एतत्स्तवीयपद्यैकैकपादप्रथमाक्षरसंयोजनेन रामरक्षास्तोत्रीयपद्यानि निस्सरन्तीति मुख्योऽत्र कविकृतश्चमत्कारो ज्ञेयः । अत एव पादप्रथमाक्षराणां स्थूलतया न्यासः॥ शिञ्जानेति॥ मध्यैः पूतैः सुरैः ( कर्तृभिः) अद्भिरिव जलैरिव रोचिर्भिः प्रभाभिरतिशयेन रुद्धं व्याप्तं अन्तरालं मध्यभागो येषां तथोक्तैः सुकुटैरिव सुघटैरिव शिञ्जानैर्मिथः संघट्टेन शब्दायमानैर्मञ्जुभिर्मुकुटैः ( करणैः ) सिच्यमानं रामानुगस्य मारुतेः द्युतरूपमानं कल्पवृक्षोपमं पदयुगं विनुमः स्तुमः ॥ १ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


घर्मोपमानभवतापजुषः पुमांसोऽ-
वः सत्यमेव सुखदः परिदर्श्यते वः ।
पादद्युपादप उदेति वनौकसोऽर्ति-
नु, च्छाय एष इति तत्तलमाश्रयध्वम् ॥ २ ॥

घर्मोपमानेति ॥ घर्मोपमानं निदाघोपमं भवतापं संसारोपतापं जुषन्ते सेवन्ते तथोक्ता हे पुमांसः ! वो युष्माकं सुखदोऽवो रक्षकः परिदर्श्यते । वनौकसः कपेर्हनुमत इति यावदेषोऽयमर्तिनुत् तापनाशिनी च्छाया प्रतिबिम्बं च यस्य तथोक्तः पादकल्पतरुरुदेतीति हेतोस्तत्तलं तस्य नीचैर्भागमाश्रयध्वम् ॥ २ ॥

भा यन्नखेभ्य उदिता मुदिता समुद्र-
लंघस्य साधु समये समयादधस्तात् ।
दर्वीकरेभ्य इव सूचयितुं प्रियं स्वं
शर्म प्रयच्छतु कपीशपदद्वयं तत् ॥ ३ ॥

भा इति ॥ समुद्रलंघनसमये यस्य ( पदयुगस्य ) नखेभ्य उद्गता भाः कान्तिर्मुदिता प्रसन्ना सती स्वं प्रियं " हनुमान् सीतोपलब्ध्यै दुस्तरं समुद्रं लंघितवान् " इति रूपं स्वेष्टं सूचयितुमिवाऽधस्तात्पातालं समयादगच्छत्तद्धनुमत्पादयुगलं शर्म सुखं ददातु ॥ ३ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


रक्ता हि यत्र भृशमङ्गुलयो रमन्तेऽ
थात्सारितेव रुचिरा रुचिराश्रयं यम् ।
मत्वा परं व्रजति रक्ततराऽपि, सस्वौ-
जः; संयुतो हनुमतो नु मतोऽङ्घ्रिपद्मः ॥ ४ ॥

रक्तेति ॥ यत्राङ्घ्रिपद्मे रक्ता आलोहिताः ( अनुरक्ताश्च अङ्गुलयो भृशमत्यर्थं रमन्ते विलसन्ति, अथ चाऽऽत्सारिते कपटगतिं नीतेव विरुद्धेवेत्यर्थः आत्सारितेति रूपं आङ्पूर्वात् 'त्सर छद्मगतौ' इति धातोर्ण्यन्तात् क्तप्रत्यये ज्ञेयम् रक्ततराऽप्यतिलोहितापि ( अत्यनुरक्ताऽपि च ) रुचिरा रुचि कान्तिर्यमाश्रयं स्वाधारभूतं यं ( पादपद्मं ) परमन् मत्वा व्रजति दूरं गच्छति इत्येतदत्र वैचित्र्यं दर्शितम् । स्वौजसा सुतेजसा संयुतो हनुमतो मारुतेर्गदयुतस्य चाऽ ङ्घ्रिपद्मो नु ( वितर्के वा प्रश्ने ) मत इष्टः ॥ ४ ॥

कौ धावतेऽतिगमिताम्बुधये तु यस्मै
शल्यादिभिर्विरहितां सहितां प्रकाशैः ।
येयामिव स्फुटयितुं पदवीं यदीया
योज्येव याति पदरुक्पुरतः स पातु ॥ ५ ॥

कौ इति ॥ अतिगमित उल्लङ्घितोऽम्बुधिः समुद्रो येन तथोक्ताय कौ पृथ्व्यां धावते यस्मै ( हनुमते ) शल्यादिभिः कण्टकादिभिर्विरहितां वर्जितां प्रकाशैश्च सहितां येया

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


गम्यां पदवीं सरणिं दर्शयितुमिव यदीया पदरुक् चरणका-न्तिर्योज्येव दासीव पुरतोऽग्रे याति, स हनुमान् पातु ॥ ५ ॥

दृष्ट्वा यदीयपदपङ्कजमेकवारं
शौटीर्यवीर्यसहितं जलराशिलंघे ।
पापात् प्रमुच्यत इहैव नरश्च पूज्यो-
तुल्यो भवत्यवतु सोऽनिलनन्दनो नः॥६॥

दृष्ट्वेति ॥ जलराशिलंघे समुद्रलंघने शौटीर्यवीर्यसहित-मुद्भटत्वबलविशिष्टं यदीयं पदपंकजमेकवारं सकृदपि दृष्ट्वा नरोऽत्रैव लोके पापात् प्रमुच्यते तथा पूज्योऽतुल्योऽनु-पमश्च भवति सोऽनिलनन्दनो मारुतिर्नोऽस्मानवतु रक्षतु ॥ ६ ॥

वित्यज्य याति जनकस्य गृहं हि जाता
श्वासारतां सुदधती स्वविवृद्धिकाले ।
मिथ्यात्वहीनमिति निर्दिशतीव यद्धा-
त्रस्थेनवेश्म भजते भज ते पदे हृत् ॥ ७ ॥

वित्यज्येति ॥ जातोत्पन्ना ( पुत्री ) स्ववर्द्धनकाले जनक-स्योत्पादकस्य ( पितुः ) गृहं वित्यज्य विहाय श्वासाऽऽरतां श्वासागमत्वं श्वासस्याऽरत्वं शीघ्रतां वा सुदधती धरन्ती याति गच्छति "इनवेश्म पतिगृहम्" इत्युत्तरत्रत्यामिहाऽपि यो-जनीयम् । पतिगृहं गच्छतीत्यर्थः ( कान्तिमुद्दिश्य तु 'आशु

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

आसारताम्' इति च्छेदेनाऽऽशु शीघ्रं आसारतां धारासंपातभावं धरन्तीत्यर्थो ज्ञेय आसारवाद्धि कान्तिप्रसारो भवति ) इति मिथ्यात्वहीनं सत्यं निर्दिशतीवोपदिशन्तीव ययोर्भा कान्तिरत्रस्थेहस्था पादस्थेति यावत् । इनवेश्म सूर्यगृहं व्योमेति यावत् । पतिगृहं च; भजते श्रयति; हे हन्मनस्ते पदे चरणे मारुतेरिति शेषः भज श्रय ॥ ७ ॥

प्रिय् सर्वदैव बहुरक्ततराऽङ्गुलीषु
यः श्रीमतो हनुमतोऽङ्घ्रियुगप्रकाशः ।
श्रुत्यादिकीर्तितगुणो दशदिक्षु सूर्योऽ-
तीन्धेऽयमित्यवगतः कविभिस्सवोऽव्यात् ८

प्रिय् इति ॥ रक्ततरास्वतिलोहितासु ( अनुरक्तासुच ) अङ्गुलीषु सदैव प्रिय् प्रिय इव भर्त्तेवाचरतीति प्रियति ततः क्विपि प्रिय् पतिरिवाऽऽचरितेत्यर्थःयो हनुमतःपादयुग्मप्रकाशः श्रुत्यादिषु वेदादिषु कीर्तिताः स्तुता गुणा यस्य तथोक्तः सूर्योऽयं दशसु दिक्षु अतीन्धेऽतिदीप्यते इत्येवंरीत्या कविभिरवगतस्तर्कितस्स वो युष्मानव्यात् पायात् ॥ ८ ॥

घ्रातव्यभव्यसुरभिः सुरभिः सदा प्र-
णंदन्मनोभिरमरैर्भ्रमरैरिवोच्चैः ।
पापप्रतापसुसमापनतापरः सोऽ-
तुल्यः पुनातु पुरु पावनिपादपद्मः ॥ ९ ॥

घ्रातव्येति ॥ प्रणंदन्मनोभिस्तुष्यच्चित्तैर्भ्रमरैरिव सुरै-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


श्रातव्यते भव्यः सुरभिः सुगन्धिस्तथा सुरभिर्मनोज्ञस्तथा पापानां यः प्रकृष्टस्तापस्तस्य समापनतायां शमकभावे परः सक्तोऽतुल्यः पावनेर्हनुमतः पादपद्मः पुरु बहु पुनातु पवित्रयतु ॥ ९ ॥

मय्युच्छ्रितात्मनि क एधत आ इतीव
खज्योतिषां समुदयाय रुषेव रक्ता ।
त्रासं प्रदातुमित एति हि यत्प्रभोर्द्ध्वं
ता,यात्स देव. भवतो भवतोऽङ्घ्रिपद्मः॥१०॥

मयीति ॥ उन्नतात्मनि मयि सत्यामपि आः ( कोपे ) क एधते वर्द्धते इतीव इति कारणादिव रुषेव क्रुधेव रक्ता यत्प्रभा यस्य ( पादपद्मस्य ) कान्तिः खज्योतिषां तारादीनां समुदयाय गणाय त्रासं भयं प्रदातुमितः स्थानादूर्द्ध्वमेति गच्छति । हे देव ! हनुमन् ! स भवतोऽङ्घ्रिपद्मः भवतः संसारात्तायात्तारयतात् ॥ १० ॥

मुञ्चन् फणामजगरोऽतिगरोऽयमित्थं
खं संस्पृशन्नुपरितः परितश्च यस्य ।
सौलभ्यतः परिचितः कविभिः सुपुच्छो
मिथ्यात्वमन्तयतु नः स समीरसूनुः ॥११॥

मुञ्चन्निति ॥ फणां मुञ्चन् क्षिपन्नयमतिगरो बहुविषशाल्यजगरस्तितालित्सः इत्थमेवंरीत्या उपरितः परितः समन्ताच्च

१ इतिपादवर्णनं समाप्तम् ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


खमाकाशं स्पृशन् यस्य सुपुच्छः सौलभ्यतः सुलभतया न तु कठिनतया कविभिः परिचित उपलक्षितः स समीरसूनुर्नोऽस्माकं मिथ्यात्वमनृततामन्तयतु नाशयतु ॥ ११ ॥

त्रिर्यं स्वपुच्छमलमच्छकशासुपट्ट-
वत् सन्ततं ह्युपरितः परितः प्रकम्प्य ।
सन्ताडिता हनुमता रिपवः स धूते-
लः;कम्पयेत किमुनाऽस्मदरातिवर्गम् ॥ १२ ॥

त्रिर्यमिति ॥ हनुमताऽलमत्यर्थं उपरितः परितः संततं विस्तीर्णं यं स्वपुच्छम् अच्छ उज्ज्वलो यः कशापट्टस्तद्वत्त्रिस्त्रिवारं प्रकंप्य भ्रमयित्वा रिपवस्ताडिताः स धूता कम्पिता इला भूर्येन तथोक्तः पुच्छः किमस्माकमरातिवर्गं रिपुगणं न कम्पयेत, आपि तु कम्पयेदेव । पृथ्वीकम्पनसमर्थस्य शत्रुवर्गकम्पनं तु सुकरमेवेति भावः ॥ १२ ॥

जित्वाऽक्षमुच्छलितमन्यपरं प्रतीवाऽऽ-
ह्वां कर्त्तुमीहितवतः समदं समानम् ।
विर्वालधी रयत ऐदिव खं हि यस्याऽ-
द्याऽस्मान् प्रबोधयतु सोऽप्रथमो वनौकाः ॥ १३ ॥

जित्वाक्षमिति-उच्छालितमुन्मत्तं अक्षं रावणिं जित्वाऽन्यपरं द्वितीयं शत्रुं प्रतीव समदं सगर्वं समानं सादरं चाऽऽह्वां स्पर्द्धयाऽऽह्वानं कर्त्तुमीहितवतो वाञ्छितवतो यस्य ( हनुमतः )

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


वालधिर्वालहस्तो रयतो वेगेन विः पक्षी खमाकाशमिवेद् गतः स न प्रथमो यस्मात्तथोक्तो वनौकाः कपिरस्मानद्य प्रबोधयतु सर्वथाऽवधापयतु। अपि चाऽक्षमिन्द्रियं जित्वाऽन्यशत्रुं कामादिकं प्रत्याह्वातुमीहितवतो यस्य ( वनौकसो मुनेः ) बालधीर्वबयोरैक्याद्बालवद्धीर्बुद्धिर्विरिव खमिन्द्रियं ( प्रति ) अगच्छत् सोऽत एवाऽप्रथमोऽपूर्वो वनौका वनागारस्तपस्वी प्रबोधयतु भवच्छेदनरूपं प्रबोधं ददातु । इन्द्रियं जित्वाऽपि यस्य बालवद्बुद्धिः पुनरिन्द्रियं प्रति गतेदृशस्य तस्याऽपूर्वत्वं सिद्धमेव । अन्यपरं समदं समानं इत्यत्र च पुनरुक्तवदाभासः, अक्षमित्यत्र जातावेकवचनम् ॥ १३ ॥

निन्ये यमाशु शमितां शमितस्वभक्ताऽऽ-
धिः शान्त एव हि हरिस्मरणे हनूमान् ।
पापिद्विषां च शमने स्वयमुद्भटः स्व-
तुल्यं व्यधाच्छमिह गुच्छयतात्स पुच्छः ।

निन्य इति ॥ शमिता स्वभक्तानामाधयो येन तथोक्ता हरिस्मरणे रामरूपस्मरणे शान्त एव हनुमान् यं शमितां शान्तं निन्ये पापिनां द्विषां च शमने नाशने स्वयमुद्भट उत्कटः ( हनुमान् ) स्वतुल्यं स्वसदृशमुद्भटत्वामिति भावः । व्यधाकृतवान्स पुच्छ इह शं शिवं गुच्छयतात् स्तबकयतु ॥ १४॥

कंदर्पदर्पदलनं गलनन्दिताऽहिं
ठं दध्युषोऽवतु कपेः स्तिमितः स पुच्छः ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


भव्योऽभवत्तदनु यस्य हि वालहस्तो
रक्षोदयाऽनुगतियन्त्रितसूत्रशाली ॥ १५ ॥

कंदर्पेति ॥ कंदर्पदर्पदलनं काममदनाशकं तथा गले कण्ठे नन्दितोऽहिः सर्पो यस्य तथोक्तं ठं महेशं "ठो महेश्वर आख्यातः" इति कोशः। दध्युषो ध्यातवतः कपेर्हनुमतः स्तिमितो निश्चलः स पुच्छोऽवतु ध्याने हि पुच्छस्य निश्चलत्वमुचितमेव । तदनु पुच्छसन्दीपनकाले यस्य (पुच्छस्य) वालहस्तो वालधी रक्षोभी राक्षसैरदयाऽनुगत्याऽकृपासम्बन्धेन यन्त्रितानि बद्धानि यानि सूत्राणि शणकर्पटादीनि तैः शलति शोभते तत्तथोक्तो भव्यः प्रियदर्शनो (निश्चलतयेति भावः) "पूर्वं कृतनिश्चलत्वाऽभ्यासस्य पश्चान्निश्चलीभवनं सुकरमेव" अभवत्। बवयोरैक्याद्वालहस्तश्च रक्षाया उदयस्याऽनुगत्यै यन्त्रितं यत्सूत्रं तद्धरति तथोक्तो भव्यो भवत्येव ॥ १५ ॥

तन्यात्तमामातिमातिं विहितस्तुतीनां
वंद्यस्य तद्धनुमतो ललितं सुलूमम् ।
दिष्टाऽहिबन्धनमरिव्रजमाशु येने
तःप्रक्षतोऽपि फणिनेव बबन्ध वीरः ॥१६॥

तन्यादिति॥वन्द्यस्य हनुमतस्तल्ललितं सुलूमं सुपुच्छं विहिता कृता स्तुतिर्यैस्तथोक्तानां भक्तानामातिबहुमतिं बुद्धिं तन्यात्तमां तनोतुतराम्।फणिनेव सर्पेणेव येन (पुच्छे-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

न ) इतः पक्षतः श्रीरामपक्षाद्वीरो हनुमान् दिष्टं दत्तमहिबन्धनं फणिपाशबंधनं येन तथोक्तमरिव्रजं शत्रुगणमाशु शीघ्रं बबन्ध । तथाविधस्य तथाविधरीत्यैव प्रतीकार उचितः ॥ १६ ॥

स्कंदाभ ईशजतया च सशक्तितायां
धौरेयतां कपिबले दधदेधतां सः ।
दिष्ट्या तु यस्य भवकूपनिमग्नजन्तून्
व्यामोहितानुपरि कर्षति पुच्छरज्जुः॥१७॥

स्कंदाभइति॥ईशजतया शिवांशजत्वेन तथा सशक्तितायां बलवत्त्वे शक्तिधरत्वे च स्कन्दाभः कुमारतुल्यस्तथा कपिबले वानरसैन्ये धौरेयतां धुर्यतां दधत् स ( हनुमान् ) एधतां वर्द्धताम्।दिष्ट्येति हर्षसूचकमव्ययम्।यस्य पुच्छ एव रज्जुर्व्यामोहितानज्ञानमूर्च्छितान् भव एव कूपस्तत्र निमग्नाञ्जन्तूनुपरि कर्षत्युद्धरति ॥ १७ ॥

युद्धे हि येन करटीव करेण वीरोऽ-
धः पातयन् विटपिनो नहि विघ्नमाप ।
पापं लुनातु मलमल्लकिनः सुमल्ल-
तु,ल्यस्य लूममममलं मम लंबितं तत् ॥१८॥

युद्ध इति ॥ वीरो हनुमान् करटी करी करेण शुण्डयेव येन ( पुच्छेन ) युद्धे विटपिनस्तरूनधः पातयन्विघ्नं नह्याऽऽप न लेभे ( हस्तादिभिर्युद्धे क्रियमाणे चेन्मध्ये तैरेव

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


तरूत्पाटनं तर्हि युद्धे विघ्नः स्यात् पुच्छेन च साध्यमाने तत्कार्ये न कोऽपि विघ्न इति भावः) मलमल्लाकिनः कौपीनवतः सुमल्लतुल्यस्य ( हनुमतः ) अमलं लम्बितं तल्लूमं पुच्छं मम पापं लुनातु छिनत्तु ॥ १८ ॥

भुञ्जीत तत्फलमिहैव स यो यदंज्याज्-
जौर्त्यप्रदं परहृदो निदिशन्नितीव ।
भव्यो हि योऽरिषु तमैक्षयतर्द्धिमाप्याऽ-
ग्नेः पूर्वमात्मनि स पातु कपीशपुच्छः॥१९॥

भुञ्जीतेति ॥ यः परहृदोऽपरमनसो जौर्त्यप्रदं व्यथाकरं यदंऽज्यात् प्रकटयेत् स इहैव लोके तस्य फलं भुञ्जीताऽनुभवेत् इति निदिशन्निव निर्दिशन्निव यो हि भव्यः प्रियदर्शनः ( पुच्छः ) पूर्वमात्मनि अग्नेर्ऋद्धिमाप्य प्राप्य तं ( अग्निम् ) अरिषु शत्रुष्वैक्षयत प्रादर्शयत्(स्वयं त्वऽग्नेर्ऋद्धिमात्रमन्वऽभूदरिषु त्वग्निमेवाऽपातयादिति भावः ) स कपीशपुच्छः पातु ॥ १९ ॥

शक्तो निशाचरमहःशिथिलीकृतौ यः
कार्यें वशीकरण आशु च शूर एव ।
मुञ्चेद्दशेऽस्थितमारिं सुकशेव शोभौ-
कःप्रातु शौर्यमनिशं बहुशः स पुच्छः२०॥

शक्त इति॥निशाचराणां रक्षसां महसस्तेजसः शिथिली-

१ इति पुच्छवर्णनं समाप्तम् ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


कृतौ शिथिलीकरणे शक्तः समर्थस्तथाऽऽशु वशीकरणे कार्ये शूर एव यः(पुच्छः)वशे स्थितमरिं मुञ्चेत्त्यजेन्नान्यथेत्यर्थः। स शोभौकः शोभास्थानं सुकशैव कशापट्ट एव पुच्छो बहुशोऽनिशं शौर्यं बलं प्रातु पूरयतु भक्तेष्विति भावः। अत्र शकारस्य द्वादशाक्षरिका क्रमेण कविना दर्शिता ॥ २० ॥

कण्ठोत्तमांगलसितौ सुसिताविवाऽही
रौप्याविव स्वतनुजाय हरेण दत्तौ।
सीदद्भिरेवमरिभिः प्रवितर्कितौ यौ
तावत्र शं वितनुतां कपिराजबाहू ॥ २१ ॥

कंठोत्तमाङ्गेति॥कण्ठोत्तमाङ्गयोर्गलशिरसोर्लसितौ स्थितौ रौप्याविव राजताविव सुसितौ सुश्वेतावही भुजगाविव हरेण स्वतनुजाय हनुमते (हनुमतः शिवांशजत्वं वर्त्तत एवाऽतएव "शंकरसुवन केसरीनन्दन" इत्यादि कवीश्वरैः प्रयुक्तम्) दत्तौ एवमिति रीत्या सीदद्भिः (भुजाभ्यां) दुःख्यद्भिरारिभिर्यौ तर्कितौ तौ कपिराजस्य बाहू अत्र शं शिवं वितनुताम् ॥ २१ ॥

पद्मेशनामकथकान्प्रति नॄन्प्रदत्तो-
तिःश्रीशदूत उदितं यमदूतमन्ते।
पात्यं प्रपात्य मिषतो नु ययोर्दधे तत्-
तु,च्छस्य मुद्गरयुगं भज तद्ध्वजौ तौ ॥२२॥

पद्मेशेति॥ अन्ते मृत्युकाले पद्मेशस्य विष्णो रामस्य वा

CC-0 Pt. Chakradhar Joshi and Sons: Dev Prayag. Digitized by eGangotri



नाम्नः कथकान्वक्तृन्नृन्प्राति प्रदत्ता ऊती रक्षा येन तथोक्त श्रीशदूतो विष्णु ( राम ) दूतो हनुमानिति यावत्, उदितमागतं ( पूर्वं प्राणिनं पापिनमाशङ्क्येति भावः ) पात्यं पातनीयं यमदूतं प्रपात्य पातयित्वा ययोः ( भुजयोः ) मिषतो व्याजेन तस्य तुच्छस्य नीचस्य यमदूतस्य मुद्गरयुगं दधे दध्रे तौ तस्य ( हनुमतः ) भुजौ भज सेवस्व हे मित्रेत्यध्याहार्यम् ॥ २२ ॥

हत्याऽङ्गतोऽरिसुदृशां मृतभर्तृकाणां
दस्योः पृथोः स्वसहसा सहसा च हत्या ।
यंत्रेण योऽगदमणेर्भुजयोश्च तत्राऽ-
जानान्नु दाऽर्थचयमाशु विभुः स पायात् २३

हत्येति ॥ मृता भर्त्तारो यासां तथोक्तानामरिसुदृशां शत्रुस्त्रीणामङ्गतो भुजतो हत्या दूरीकरणेन ( प्रियविरहेणाऽङ्गस्य खण्डकत्वादिति भावः ) सहसा युगपद्धनुमता सह युद्धकाले स्वसहसा स्वबलेन पृथोर्जातस्थूलतनोर्दस्योः स्वशत्रोश्चाऽङ्गतो हत्याऽपसारणेन ( सहसा पृथुतनुत्वेन तस्य च्छेदकत्वादिति भावः ) स्वभुजयोश्चाऽङ्गदमणेर्यन्त्रेण धारणेन तत्राऽङ्गदमणौ दाऽर्थचयं दाधात्वऽर्थसमुदायमाशु शीघ्रमजानात् । स विभुर्हनुमान् पायात् । अङ्गं द्यति खण्डयतीति मत्वा शत्रुस्त्रियामङ्गदहरणे खण्डनरूपमर्थम्; अङ्गं दाति लुनातीति मत्वा शत्रोरङ्गदहरणे च्छेदनरूपमर्थम्;

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri



अंङ्गं ददाति, यच्छति दायति दयते वा इति मत्वा स्वभुजयोर्धारणे दानशोधनरक्षणरूपानर्थांश्च हनुमान् सत्वरमेव ज्ञातवानिति तात्पर्यम् ॥ अत्र यद्यपि भुजस्य प्रकृतत्वं न भाति तथापि तद्रूपतया वर्णनेन तद्वर्णनमेव ज्ञेयम् । इह कविना "दो अवखण्डने, दाप् लवने, डुदाञ् दाने, दाण् दाने, दैप् शोधने, देङ् रक्षणे" इत्येवंरूपाः सर्वे दाप्रकृते, रर्था दर्शिताः ॥ २३ ॥

मह्युद्भवाऽर्पितमणिग्रहणक्षणेऽनु-
दग्ग्राऽऽननस्य सुकपेर्नमितो भुजो यः ।
न्यस्य स्वकेऽहिसमतां नतपाणिकोष-
जित्. सन्मणीफणमणी मनुते स्तुवे तम् २४

महीति ॥ मह्युद्भवाऽर्पितायाः सीतादत्ताया ( अभिज्ञान ) मणेर्ग्रहणस्य क्षणेऽवसरेऽनुदग्ग्रमवनतमाननं यस्य तथोक्तस्य सुकपेर्नमितो यो भुजः स्वक आत्मानि अहिसमतां भुजगतुल्यतां न्यस्य संस्थाप्य नतो यः पाणिरेव कोषः कोषाकारःकर इति भावस्तत्र जयति राजति तथोक्तो यो मणिश्च तौ (क्रमेण) फणश्च मणिश्च तौ मनुते जानाति तं स्तुवे नौमि । भुजः सर्पः कोषाकारः करः फणः । मणिश्च फणमणिरिति तात्पर्यम् ॥ २४ ॥

---

१ दानाऽर्थे त्वङ्गमुपायमित्यर्थः कार्यः ॥ "अङ्गं गात्रे प्रतीकोपाययोः इत्यादि मेदिनीकोशे ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


मत्वा गिरिं तृणमिवोद्धृतवान्कपीशोऽ
ध्यंगं हि यस्य सहसा स हरीशबाहुः ।
पापैर्निशाचरचयैस्त्रपयैव दृष्टोऽ-
तुल्यः शुचं शमयतामयताञ्च शोभाम् २५॥

मत्वेति॥कपीशो यस्य(बाहोः)अध्यङ्गमङ्के करे गिरिं पर्वतं तृणमिव मत्वा सहसोद्धृतवान् पापैर्निशाचराणां चयैर्गणैस्त्रपयैव लज्जयैव ( संजीवन्याद्याहरणरूपे कार्ये विहन्यमानेऽपि सर्वपर्वतानयनेन स्वोद्योगस्य निष्फलीभूतत्वाल्लज्जा भवेदेव ) दृष्टोऽतुल्योऽसमः स हरीशबाहुर्हनुमद्भुजः शुचं शोकं शमयतां तथा शोभामयतां प्राप्नोतु ॥ २५ ॥

खद्योतमुद्गतमवेत्य रसालमेव
रत्या तमाप्तुमित उत्पततोऽति वातेः ।
ध्वंजद्घृणिर्भुजयुगल्यऽधिरोहिणी या
सी,दन्नृणां दिवि गमाय तता श्रये ताम् २६

खद्योतमिति॥ उद्गतमुदितं खद्योतं सूर्यं रसालमाम्रमवेत्य ज्ञात्वा रत्या प्रीत्या तं रसालं ( सूर्यम् ) आप्तुमादातुमितः स्थानादत्यऽत्यर्थमुत्पतत उच्छलतो वातेर्हनुमतो ध्वजन्तः प्रसरन्तो घृणयोऽङ्गदादिकिरणा यस्यास्तथोक्ता या भुजयुगली सीदन्नृणां दुःखयतां नराणां दिवि स्वर्गे गमाय गमनायाऽधिरोहिणी निश्रेणिस्तता प्रसारिता । तां ( भुजयु-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


गलीं ) श्रये भजे । अत्र प्रतीयमानोत्प्रेक्षा । भुजयुगल्यामधिरोहण्यां मध्यस्थाः किरणा मध्यदण्डा विज्ञेया इति तात्पर्यम् ॥ २६ ॥

नाभस्वतस्य च सदर्पकचेष्टितं तद्
भिंदानमार्तिगणमुज्ज्वलचारुशोभम् ।
जाग्रत्पलाशपतनं मधुमाधवीया-
म्बर्ह्रीं श्रियं तुलयदुच्यतु दोर्द्वयं वः ॥२७॥

नाभस्वतस्येति ॥ दर्प एव दर्पको मदस्तस्य चेष्टितैः सह विद्यमानमन्यत्र दर्पकस्य कामस्य चेष्टितैः सह विद्यमानं तथार्त्तिगणं धनुष्कोटिगणं पीडागणं च 'अर्त्तिः पीडाधनुष्कोट्योः' इति कोशः । भिंदानं विदारयत्तथोज्ज्वला स्वच्छा चारुशोभा मनोज्ञशोभा यस्य तथोक्तमन्यत्रोज्ज्वलस्य शृङ्गारस्य चारुशोभा यत्र तथोक्तम् । तथा जाग्रन्नवीनतया भवत्पलाशानां रक्षसां पतनं येन ( करणेन ) तथोक्तमन्यत्र जाग्रत्स्फुरत्पलाशानां पत्राणां पतनं यत्र तथोक्तम् । मधुमाधवीयां चैत्रवैशाखसम्बाधिनीं बर्ह्रीं श्रियं शोभां तुलयदनुकुर्वत्तद् दोर्द्वयं वो युष्मभ्यमुच्यतु योग्यमनुकूलं वा भवतु भुजौ चैत्रवैशाखावित्यर्थः । अत्र मधुमाधवीति वृत्तनामस्तदीयपद्ये युक्त्या वर्णनान्मुद्रालङ्कारोऽपि ज्ञेयः ॥ २७ ॥

वन्येशितुर्भुजलताऽङ्गुलिशाखिकाऽव्या-
दासक्तपाणिदलकंकणिका च तत्र ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri



श्रद्धेयमुत्पृथु दरस्फुटितं सुमं तद्
यः; सार्थकः करधृतः खलु मुद्गरोऽस्ति २८

वन्येति ॥ अङ्गुलय एव शाखिकाः शाखा यत्र तथाऽऽसक्तं पाणावेव दले पल्लवे कङ्कणं करभूषणं कंकणिका जलकणिका च यत्र तथोक्ता वन्यानां वनौकसामीशितुरीश्वरस्य हनुमतो भुज एव लताऽव्यात् तत्र ( भुजलतायां ) यः खलु करधृतः सार्थको मुदो गरत्वेन सत्यार्थो मुद्गरोऽस्ति तद्दरस्फुटितमीषद्विकासितमुत्पृथु अतिस्थूलं सुमं पुष्पं श्रद्धेयं प्रत्येतव्यम् ॥ २८ ॥

सुष्ठु स्मराम्यऽपि च तौ सुकपिप्रवेष्टौ
ग्रीवासुकम्बुमति नाभिजलभ्रमाढ्ये ।
वेलोत्कटे हनुमतोऽङ्ग्युदधौ च यौ साऽऽ
शः सत्कविः सुमनुते तटभित्तिबन्धौ ॥२९॥

सुष्ठिति ॥ ग्रीवैव सुकम्बुः सुशंखस्तद्वति नाभिरेव जलभ्रम आवर्तस्तेन युक्ते तथा वेलयोस्तीरयोर्वेलायामवसरे चोत्कटे हनुमतोऽङ्गिनि देह एवोदधौ समुद्रे यौ ( भुजौ ) सत्कविः सुकविः साशः सन्नाशायुतः संस्तटभित्तिबन्धौ तीरयोर्भित्तिबन्धौ सुमनुते तर्कयति तौ सुकपिप्रवेष्टौ हनुमद्भुजौ सुष्ठु सुतरां स्मरामि ॥ २९ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


कञ्जासनेन रचिता रिपुताडनाय
टीक्याविमौ हनुमतः किमु दीर्घदण्डौ ?।
पा स्तम्भकौ हरिरधाद्धुत धर्तुमर्याऽ-
तु,न्नं जगन्निवति मतौ नम वातिबाहू ॥३०॥

कञ्जासनेनेति ॥ किमु कञ्जासनेन ब्रह्मणा हनुमतो मारुते रिपुताडनायेमौ टीक्यौ व्याख्येयौ स्तुत्याविति यावद् दीर्घदण्डौ रचितौ उताऽथवा पाः रक्षको हरिर्हनुमान् अरिभिः शत्रुभिरातुन्नं परितो दुःखितं जगद्धर्तुं स्तंभावधाद्धृतवान्नु इति वितर्के, इति मतौ शंकितौ वातिबाहू मारुतिभुजौ त्वं नम । पास्तभकावित्यत्र खर्परे शरि वा विसर्गलोपः ॥ ३० ॥ ❋

सक्तद्युतेर्द्युतिविभातविभातकालोत्-
थित्यऽच्छकच्छविधृतो रविमण्डलस्य ।
नीकाशभावमयमानमथाऽसमानं
हर्यच्छभल्लपतिमंत्रिमुखं तदव्यात् ॥ ३१ ॥

सक्तद्युतेरिति ॥ सक्ता जाता कान्तिर्यस्य तथोक्तस्य तथा द्युत्या शोभया विभाते शोभिते विभातकाले प्रातःकाले योत्थितिरुदयस्तस्या अच्छां छविं द्युतिं धरति तथोक्तस्य रविमण्डलस्य नीकाशभावं सादृश्यमुपमानं लभमानमपि चाऽसमानमतुल्यमिति विरोधेन मानेनाऽहंकारेणसह विद्य-

❋ इति भुजवर्णनं समाप्तम् ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri



मानमित्यर्थे परिहारः तद्धर्यच्छभल्लपतेः सुग्रीवस्य यो मन्त्री हनुमांस्तस्य सुखमव्यात् ॥ ३१ ॥

नुत्यो रविः किमुदितो न तु पूर्वसानु-
मत्कूट एष किमु राजति पूर्णचन्द्रः ?।
प्रत्यक्षमेतदह रा मनितं तु यस्याऽऽ-
भुः. संमुदा जनकजाऽऽप्तिजयाऽऽन्तराणि ३२

नुत्य इति ॥ नुत्यः स्तुत्यो ( उदयकाले ह्यर्कः स्तुत्यो भवत्येव ) रविः किमुदितः तु परन्त्वेष पूर्वसानुमतः पूर्वाद्रेः कूटः शिखरं न तत्रैव स उदेतीति भावः किमु पूर्णचन्द्रो राजति परमेतत्प्रत्यक्षमहर्दिनं न तु रात्रिः । (तदुदयस्य रात्रावेव संभवादिति भावः)आः मनितं ज्ञातं यस्य (हनुमतो) जनकजाऽऽप्तिजया सीतालब्धिभवया संमुदा प्रीत्याऽऽन्तराणि अन्तःस्थानि बुद्ध्यादीनि आभुरराजन् ॥ ३२ ॥

ऊरू प्रताडयत एव हि तस्य वाते
रूढप्रसादमवलोक्यत आननाब्जम् ॥
रत्येति संप्रथित ऋक्षमुखैः सदा स
धूतक्रुन्निशाटगणमेजयतां मुखेन्दुः ॥ ३३ ॥

युग्मम् ।

ऊरू इति-ऊरू प्रताडयत आस्फोटयतस्तस्यैव वातेर्हनुमतो रूढप्रसादं जातप्रसन्नभावमाननाब्जं मुखकमलमवलोक्यते

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


दृश्यते इत्येवंरीत्या रत्या प्रीत्या ऋक्षमुखैः जाम्बवदादृक्ष-मल्लप्रमुखैः संप्रार्थितस्तर्कितः स मुखेन्दुराननचन्द्रः सदा घूत्कृतं घूदिति भयंकरशब्दकारकं निशाटगणं निशाचरस-मूहमेजयतां कम्पयताम्॥ अपि च चन्द्र ऋक्षमुखैरश्विन्यादि-मुखैः संप्रथितः स्तुतः शोभितः सन्वा घूतकृतं घूदिति स्वाभाविकशब्दकारिणं निशाटगणं घूकसमूहमेजयते शो-भयत्येव । द्वाभ्यां पद्याभ्यामन्वये युग्ममित्युच्यते॥ ३३ ॥

तथ्यं भवेदजलजो यदि पद्म उद्यद्-
मः सर्वदाऽपि च स तापनमण्डलेन ।
पादोत्करेण न हि जात्वऽपि तापितः स्यात्
तु,ल्यत्वमात्मनि तदैव लभेत येन ॥ ३४ ॥

तथ्यमिति ॥ यदि पद्मः कमलमजलजोऽजडजातः 'डलयोरैक्यम्' अपि च सर्वदाऽहर्निशं उद्यती उद्दीप्यमाना मा विकासरूपा शोभा यस्य तथोक्तो भवेत् स्यात्तथा तापन-मण्डलेन सूर्यबिंबसम्बन्धिना पीडकसमूहसम्बंधिना च पादोत्करेण किरणगणेन चरणगणेन च जात्वपि कदाऽपि तापितो दुःखितश्च न स्यान्न भवेत्तदैव येन ( हनुमन्मुखेन ) आत्मनि स्वे तुल्यत्वं सादृश्यं लभेत प्राप्नुयात् । अत्र दृष्टान्तमुत्तरपद्येन दर्शयति ॥ ३४ ॥

रत्या युतः सुकविवत्सुनिबन्धदत्ताऽ
क्षः किं कथञ्चन हठात्तपदप्रयोक्ता ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

कुञ्चन् भ्रुवौ विरचने कविवर्यमानी
लब्धुं कवीश्वरपदं प्रभवेन्मनुष्यः? ॥ ३५ ॥

रत्येति ॥ रत्या काव्यरचनप्रीत्या युतः सुकविवत् सुनिबन्धे सद्ग्रन्थे दत्ते आक्षिणी नेत्रे येन तथोक्तः । कथञ्चन कथमपि हठाद्बलात्कारेणाऽऽत्तानामाकृष्टानां पदानां प्रयोक्ता तथा विरचने निर्माणकाले भ्रुवौ कुञ्चन् कुटिलीकुर्वन् समुचितरचनाचातुर्यं स्वीयं दर्शयितुमिति भावः । कविवर्यमात्मानं मन्यते तथोक्तो मनुष्यः किं कवीश्वरपदं लब्धुं प्रभवेत् ? शक्नुयात् ? अपितु न प्रभवेदिति भावः । एतद्वदेव स वराकः पद्मो न हनुमन्मुखं तादृशमनुकर्त्तुं शक्त इति तात्पर्यम् ॥ ३५ ॥

विज्ञाय हेतुत इतोऽतुलतां तु तस्य
नाऽमूदृशो गुणगणं हनुमन्मुखस्य ।
शक्नोमि वर्णयितुमर्णवपूर्णताऽनु-
कृत, पार्थवं नु विरमामि नमामि यद्वा ॥३६॥

तिलकम्

विज्ञायेति ॥ इतो हेतुतोऽस्मात् कारणादमूदृश ईदृशस्य तस्य हनुमन्मुखस्याऽतुलतामसदृशतां विज्ञायाऽर्णवस्य समुद्रस्य पूर्णतामाभोगमनुकरोति तथोक्तं पार्थवं वितातिर्यस्य तथोक्तं ( अगाधमिति भावः ) गुणगणं गुणनिकरं वर्ण-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


यितुं न शक्नोमि। नु इति प्रश्ने। अतः किं विरमामि । यद्वा। नमामि प्रणतिमात्रं करोमीति भावः । त्रिभिरन्वये तिलकम् ॥ ३६ ॥

एवं मुखगुणवर्णनेऽशक्ततां प्रदर्श्य तदन्तर्भूतं गर्जितं चतुर्भिर्वर्णयति—

जातं यतो जनकजाऽधिगमोत्तरं चा-
नुध्वानि गर्जितमुदूर्जितमार्जवाढ्यम् ।
नीत्वा स्वकर्णपथमब्धितटे भटेन्द्राः
सेहुर्न कर्णयितुमर्णवपूर्णगीर्णम् ॥ ३७ ॥

जातमिति ॥ जनकजायाः सीताया अधिगमादुपलब्धे-रुत्तरं यतो यस्मात् ( कपींद्रमुखात् ) "इहत्यो यच्छब्द-प्रयोगः कपीन्द्रमुखं तदव्यादित्यत्र स्थितेन तच्छब्दप्रयो-गेण सम्बध्यते" जातमुदूर्जितमुत्कृष्टबलमार्जवाढ्यमृजुत्व-विशिष्टम् अनुध्वानि प्रतिशब्दि गर्जितं गर्जनमब्धितटे समुद्रतीरे । भटेन्द्रा अंगदादयः स्वकर्णपथं नीत्वा श्रुत्वाऽ-र्णवस्य पूर्णं गीर्णं ( जलसम्पर्कं ) शब्दं कर्णयितुं श्रोतुं न सेहुर्न शेकुः । समुद्रजलपूरशब्दादपि तदधिकमासीदिति भावः । चक्षिङो ङित्करणाज्ज्ञापनादनुदात्तेत्त्वलक्षण-स्याऽऽत्मनेपदस्याऽनित्यत्वादत्र सेहुरिति परस्मैपदे प्रयोगः "भटौघः—सेहे इत्यपि पाठः" ॥ ३७ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

तुष्टा वितर्क्य शिखिनो घनगर्जितं यत्
कृत्स्नाश्च नैजललनाललनाविलोलाः।
पाथोधिमाप्तवत आप्तविदेहजस्य
तु,ष्टिं हनूमत इवाऽऽतनितुं व्यनृत्यन्॥३८॥

तुष्टाइति॥नैजललनानां स्वस्त्रीणां ललनायां रमणे विलोलास्तरलास्तुष्टाः प्रीताः कृत्स्नाः सर्वे शिखिनो मयूराः यद् (मारुतिगर्जितं) घनानां मेघानां गर्जितं वितर्क्याऽऽप्ता लब्धा विदेहजा सीता येन तस्य तथा पाथोधिं समुद्रमाप्तवतो हनुमतस्तुष्टिं प्रीतिमातनितुं कर्तुमिव व्यनृत्यन्ननृतुः ॥ ३८ ॥

जंतुव्रजोऽपि वनजो हृतभक्तसक्ताऽ-
घेहं हि यत्सपदि केसरिनन्दनस्य ।
दक्षं निशम्य मनसाऽवहितेन चित्रं
शर्मप्रकर्षमतुलं लभते सलीलम् ॥ ३९ ॥

जन्त्विति ॥ वनजो वन्यो जन्तुव्रजोऽपि प्राणिगणोऽपि केसरिनन्दनस्य हनुमतो हृता नाशिता भक्तसक्ता स्वभक्तलग्नाऽघेहा पापचेष्टा येन तथोक्तं यद् ( गर्जितं ) दक्षं निपुणं यथास्यात्तथा सपदि अवहितेन सावधानेन मनसा निशम्य श्रुत्वा सलीलमतुलमपरिमितं शर्मप्रकर्षं हर्षातिशयं लभते । चित्रत्वं च वनजानां प्राणिनां केसरिनन्दनस्य सिंहस्य सावधानत्वेन गर्जितश्रवणे ततश्च हर्षातिशयाप्तौ युक्तमेव ॥ ३९ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


मुख्यस्य मर्कटकुले बत यातुधानान्
खांडव्यं सुनीतवत आशुगजस्य यच्च।
तथ्यं व्यबुध्यत तदा जयतोपशब्दं
कः,सत्कविर्नहि कपीन्द्रमुखं तदव्यात्॥४०॥

चक्कलकम् ।

मुख्येति ॥ मर्कटकुले कपिकुले मुख्यस्य तथा यातुधानान् राक्षसान् खाण्डव्यं खण्डत्वं सुनीतवतः प्रापितवत आशुगजस्य हनुमतो यत् ( गर्जितं ) कः सत्कविः सुकविस्तदा शत्रूणां शकलीकरणकाले तथ्यं सत्यं जयस्य तोपशब्दं शतघ्नीध्वनिं न व्यबुध्यताऽमन्यत । अपि तु व्यबुध्यतैव तत्तथोक्तं कपीन्द्रस्य हनुमतो मुखमव्यात् । आश्विति पृथग् विच्छिद्य गजस्य करिण इत्यर्थे तस्य च कपिकुले मुख्यताया असंभवाद् बतेत्यव्ययमत्र विरोधं दर्शयति । चतुर्भिरन्वये चक्कलकम् ॥ ४० ॥

पादेन योऽरिशिरसि प्रहतिं विधाय
दौःख्यप्रदां स्वचरणस्य च शोणिमानम् ।
विज्ञो न्यदर्शयत रक्तमिषेण नूनं
भीनाशकः कपिवरोऽस्तु स मे प्रसन्नः॥४१॥

---

१ इति मुखवर्णनं समाप्तम् ॥ अस्मिन्दशके च क्रमेणैकैकपद्यवृद्धावन्वयो दर्शितः ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


पादेनेति ॥ यो विज्ञो विशेषज्ञोऽरिशिरसि दौःख्यप्रदां व्यथादायिनीं पादेन स्वचरणेन प्रहतिमाघातं विधाय कृत्वा रक्तामिषेण रिपुशिरोनिस्सृतरुधिरव्याजेन स्वचरणस्य शोणिमानं रक्ततां न्यदर्शयत । स भीनाशको भयहरो कपिवरो हनुमान् मे प्रसन्नोऽस्तु ॥ ४१ ॥

षट्पद्भिरीश्वरपदाम्बुजयोर्यकः प्र-
णत्य स्थितोऽलिरिति चाशुगजश्च नागैः ।
श्रीमन्मृगारिभिरु केसरिपुत्र इत्यऽ-
दः संप्रधार्य जगृहे स्वत एवमेभिः ॥ ४२ ॥

षट्पद्भिरिति ॥ षट्पाद्भिर्भ्रमरैरीश्वरस्य रामस्य पदाम्बुजयोश्चरणकमलयोः प्रणत्य वन्दित्वा स्थितो यको यो हनुमान् ( यक इत्यत्राऽकच् ) अलिर्भ्रमर इति तथा नागैर्गजैराशु गजो हनुमान् आशु शीघ्रं गजः करीति च श्रीमद्भिर्मृगारिभिः सिंहैश्च केसरिपुत्रो हनुमान् सिंह इत्यदश्च इत्येतच्च संप्रधार्याऽनुशील्य एवमेभिर्भ्रमरादिभिः स्वतः स्वस्वजातौ जगृहेऽगृह्यत ॥ ४२ ॥

पातात्स पावनिरपावनपापपातात्-
तुन्नस्वकानिह भवे परिधिन्वितुन्नः ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


रागाऽऽत्तराम इति चाक्षजयी निरागा
मोक्षप्रदोऽप्यविहितस्वसुभक्तमोक्षः ॥ ४३॥

युग्मम् ।

पातात्सइति ॥ स पावनिर्हनुमानिह भवे संसारे तुन्नस्वकान् दुःखितात्मनो नोऽस्मान् परिधिन्वितुं प्रीणयितुमपावनेऽपवित्रे पापे पातात्पतनात्पाताद्रक्षतात् । हनुमन्तमुत्तरार्धेन विशिनष्टि—रागेण स्नेहेनाऽऽत्ता गृहीता रामा वनिता येन तथोक्तोऽपि अक्षजयीन्द्रियजेता इत्यर्थेन विरोधे रागेणाऽऽत्तो रामः श्रीरामचन्द्रो येन तथोक्तोऽक्षजयी रावणिजिदित्यर्थे तत्परिहारः । निरागो निष्पापो निरपराधो वा तथा मोक्षप्रदोऽपि मुक्तिप्रदोऽपि न विहितो न साधितः स्वस्य सुभक्तानां मोक्षो येन तथोक्त इत्यर्थेन विरोधे न विहितो न कृतो भक्तानां मोक्षस्त्यागो येन तथोक्त इत्यर्थे तत्परिहारः । स्वभक्तान्न त्यजतीति भावः ॥४३॥

खिन्नत्वमाप्य रुदितेन च योऽस्त्रपत्वं
लंकौकसामृतमसाधयदाञ्जनेयः ।
वन्द्यः स्व ऐक्षत शिवोद्भवतां यया चाऽऽ-
पुः क्षेममात्मसुहृदः स करोतु भद्रम् ॥४४॥

खिन्नत्वेति॥वन्द्यः स्तुत्यः यः आञ्जनेयो हनुमान् रुदितेन रोदनेन खिन्नत्वं दुःखितत्वमाप्य प्रापय्य नीतेत्यर्थः।लंकौ-

१ इति श्रीहनुमद्वर्णनं समाप्तम् ।
३

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


कसां लंकानिवासिनां रक्षसां ऋतं सत्यं अस्रपत्वम् अस्राणि नेत्रनिःसृतान्यश्रूणि पिबन्ति तथोक्तत्वं (अस्रपत्वे रुधिरपायित्वेऽस्रपत्वमश्रुपायित्वमत्रोत्प्रेक्षितम्) अश्रूणां बहुतया च पानं संभवत्येव; असाधयत्; तथा स्व आत्मनि शिवोद्भवतां कल्याणोत्पत्तित्वं (शिवोद्भवत्वे शङ्करांऽशजत्वे शिवोद्भवत्वं कल्याणोत्पत्तित्वमत्रोत्प्रेक्षितम्) यया शिवोद्भवतयाऽऽत्मसुहृदोऽङ्गदादयः क्षेमं शिवमापुः प्रापुः ( अनेन सत्यार्थत्वं व्यक्तम् ) सः ( आञ्जनेयः ) भद्रं कल्याणं करोतु अनेन "दुर्हृदां रोदनानि भवन्तु सुहृदां च मोदनानि भवन्तु" इत्यन्ते व्यक्तम् । पद्यान्ते च भद्रपदं कल्याणायोचितमेवेति शम् ॥ ४४ ॥

आद्याऽक्षरप्रकटितोत्तमरामरक्षा-
स्तोत्रीयपद्यमणिनाऽत्यऽमुना स्तवेन ।
रक्षा भवत्युभयतस्त्विति गेय इत्योऽ-
ष्टव्यस्तथैष पठनीय उचेलिमोऽर्च्यः ॥ ४५॥

आद्येति ॥ आद्याक्षरैः प्रकटिता व्यक्ता उत्तमा रामरक्षास्तोत्रीया बुधकौशिकरचितरामरक्षास्तोत्रसम्बन्धिनः पद्यमणयः श्लोकरत्नानि यत्र तथोक्तेनाऽमुनाऽनेन स्तवेन मारुतिस्तवेनाऽति बहूभयतो रामकृता हनुमत्कृता चेत्यर्थः । रक्षा भवतीति कारणादेष स्तवो गेयो गातव्यः, इत्यो ज्ञातव्यः, अष्टव्यो व्यापनीयः; पठनीयोऽध्ययनीयः, उचेलिमः, कथनीयः तथाऽर्च्यः पूज्यः । अत्र कविना कृत्यप्रक्रियास्थाः क्रमेण सर्वे

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri



श्रीलक्ष्मीधर-विद्यामन्दिर
व्यवस्थापक- पं. चक्रधरजोशी
हनुमान

यत् क्यप् तव्यत्तव्यानीयर् केलिमर्ण्यत्प्रत्यया दर्शिता विज्ञेयाः ॥ ४५ ॥

दाधीचवंश उदये ह्युदियाय कास-
ल्योपाह्वयश्छिर इनो द्विजरामवक्षः ।
तस्यात्मजेषु किल पञ्चसु पूर्वजन्मा
श्रीमाधवोऽधरत धीरधुरंधरत्वम् ॥ ४६ ॥

इदानीं कविः स्तोत्रमुपसंहरन्निजवंशमपि वर्णयति—दाधीचेति ॥ छिरे छिरनामग्रामे उदये उदयाद्रिरूपे दाधीचवंशे कासलयोपाह्वय इनः सूर्यरूपो द्विजो रामवक्ष उदियायोदयते स्म, तस्य पञ्चस्वात्मजेषु पुत्रेषु माधव—जयदेव—रामदयालु—घनश्याम—हरिनारायणनामसु पूर्वजन्मा ज्येष्ठो धीरेषु धुरंधरत्वं धीरधुरीणत्वं अधरत धृतवान् ॥ ४६ ॥

एकात्मवृत्तरचने विदधत्प्रतिज्ञां
शास्त्रार्थसंलपनमाधित यः सभासु ।
श्रीगट्टूलालबुधतर्कगिरीशतारा-
नाथादिभिर्गुणिवरैश्च बहुप्रशस्तः ॥ ४७ ॥

एकात्मेति ॥ यः सभासु विद्वद्वरसभासु एकात्मनामेकप्रकाराणां वृत्तानां छन्दसां रचने शीघ्रतया निर्माणे प्रतिज्ञां (अमुष्यां सभायां ममैषा प्रतिज्ञा, भुजङ्गप्रयातैर्विना वाङ् न वाच्या) अपि च (अस्मिन् विद्वत्सदसि मया वाग्लावनिवृत्तैर्वक्तव्या। "इति प्रतिज्ञाय" कस्मिञ्च्छास्त्रे भवदीया गतिरस्ति प्रकटी-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

कर्त्तव्या, व्याकरणेऽस्मिन्बहवो ग्रन्थाः सन्ति पुराणा अपि नव्याः अष्टाध्यायी पाणिनिराचिता तत्र नु वार्त्ता प्रष्टव्या ) इत्यादिरचनप्रतिज्ञां विदधत् कुर्वञ्च्छास्त्रार्थे संलापमकरोत्। अत एव भारतमार्त्तण्ड-शतावधानिप्रभृतिपदवीभूषितैः श्रीगट्टुलालैस्तथा तर्कवागीशाद्युपाधिमद्भिस्तारानाथैरन्यैश्च पण्डितवरैर्बहु परमं प्रशस्तः श्लाघितः ॥ ४७ ॥

तत्पुत्रयोर्भगवतीतिपदादिलालो
ज्येष्ठोऽस्ति पण्डितवरः पितृलब्धविद्यः ।
तस्याऽनुजेन च सुशिष्यवरेण नित्या-
नन्दाभिधेन बुधपादसुकिंकरेण ॥ ४८ ॥

तत्पुत्रयोरिति ॥ तस्य पुत्रयोर्मध्ये भगवतीतिपदादिलालो भगवतीलालः पितुर्लब्धा विद्या येन तथोक्तो ज्येष्ठोऽस्ति तस्याऽनुजेन कनिष्ठेन प्रधानशिष्येण च बुधपादसुकिंकरेण सच्चरणानुचरेण नित्यानन्दाऽभिधेन मयेत्युत्तरेणान्वयः ४८॥

एष स्तवोऽराचि मयोत्सववैजयन्त्यां
संपूर्णवासरमहाधुरि वै जयन्त्याम् ।
लोकान् प्रमोदजलधावनुमज्जयन्त्यां
वर्षेत्रिषणनवकुगे हनुमज्जयन्त्याम् ॥ ४९ ॥

युग्मम् ।

एषइति॥मयोत्सवेषु वैजयन्त्यां ध्वजरूपायां तथा संपूर्णानां वासराणां दिनानां महाधुर्यऽग्र्यासने जयन्त्यां सर्वोत्कर्षेण

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


वर्त्तमानायां तथा लोकाञ्जनानन्दप्रमोदस्य जलधौ समुद्रेऽनुमज्जयन्त्यां क्रोडयन्त्यां हनुमज्जयन्त्यां तथाविधायां तिथौ त्रिषण्नवकुगे १९६३ वर्षे वैक्रमार्के एषोऽयं स्तवोऽरचि निर्मितः ॥ ४९ ॥

पुरोभागितया हीनाः पुरो भागितया युताः ।
उत्साहयेयुरत्राऽऽर्या दयादृक्पातनेन माम् ॥५०॥

इतिश्रीयोधपुरस्थदाधिमथ ( दाहिमा ) कासल्योपाख्य-
धीरधुरीणश्रीमाधवात्मजाऽऽशुकविपं० नित्यानन्द-
शास्त्रिरचितः श्रीमारुतिस्तवः
समाप्तः ॥ शुभं स्तात् ॥

पुरोभागितया दोषैकदृक्तया हीना वर्जितास्तथा भागितया भाग्यवत्तया युता आर्या अत्रेह स्तवे दयादृशः कृपादृष्टेः पातनेन मां पुरोऽग्र उत्साहयेयुः ॥ ५० ॥

अवश्यटीक्यमपि यद् ध्वन्यऽलङ्करणादिकम् । नाटीकि विस्तरभियाऽत्रोह्यं तद्विदितार्थकैः ॥ १ ॥ इति शम् ।

इति श्रीयोधपुरीयवैदिकपाठालयप्रथमाध्यापक-दाधिमथ-
( दाहिमा ) कासल्योपाख्यपण्डितश्रीभगवतीला-
लशर्मनिर्मिता श्रीमारुतिस्तवव्याख्या तात्प-
र्यदर्शिनी समाप्ता ॥ शुभं भवतात् ॥

---

पुस्तक मिलनेका ठिकना—
खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" स्टीम् प्रेस-बंबई.

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

# क्रय्यपुस्तकानि ( स्तोत्रादिग्रंथाः )

| नाम. | की. रु. आ. पै. |
|---|---|
| बृहत्स्तोत्ररत्नाकर-( स्तोत्रसंख्या १४४ ) शिव, गणपति, विष्णु, देवी, सूर्य, राम, वेदांत गंगादिसरिता इत्यादिकके भक्तिमयस्तुतिवर्णन नित्यपाठोपयोगी है ( मोटाअक्षर ) | ०-१४-० |
| बृहत्स्तोत्ररत्नाकर गुटका सचित्र-स्तोत्रसंख्या १८१ विलायती कपडे की जिल्द ... | ०-१०-० |
| सादी जिल्द ... ... ... ... | ०-८-० |
| नारायण कवच मूल ... ... ... ... | ०-२-० |
| मृत्युंजयस्तोत्रम् ... ... ... ... | ०-१-६ |
| चतुःश्लोकीभागवत-और सप्तश्लोकीगीता ... | ०-०-६ |
| शिवतांडवस्तोत्रमूल ... ... ... ... | ०-०-९ |
| " तथा भाषाटीका पं. ज्वालाप्रसादकृत... | ०-१-० |
| आदित्यहृदय-वाल्मीकीरामायणका ... ... | ०-१-० |
| लक्ष्मीसहस्रनाम ... ... ... ... | ०-१-६ |
| पंचमुखी और एकमुखि हनुमान्‌कवच- ... | ०-१-६ |
| महाविद्यास्तोत्र ... ... ... ... | ०-०-९ |
| चंडिकास्तोत्र ... ... ... ... | ०-१-० |
| शनिमृत्युंजयस्तोत्र .... ... ... ... | ०-१-६ |
| यमुनालहरी-भाषाटीकासहित ... .... | ०-१-० |
| शतनामाकरस्तोत्र ... ... ... ... | ०-१-० |

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri


| नाम. | की. रु. आ. पै. |
|---|---|
| द्रव्यस्तोत्र-भाषाटीका .. ... ... ... | ०-१-६ |
| श्रीकृष्णाष्टक-सटीक ... ... ... ... | ०-१-० |
| गजेंद्रमोक्ष-भाषाटीका ... ... ... | ०-३-० |
| तथा भाषा ... ... ... ... | ०-१-६ |
| देव्यऽपराध क्षमापनस्तोत्रम् ... ... ... | ०-०-९ |
| निकुंज देवी स्तोत्र स्तवराज ... ... ... | ०-१-० |
| संतानगोपालस्तोत्र-स्त्रियोंको अवश्य पाठ करने योग्य ... ... ... ... ... | ०-१-६ |
| महाकालशनिमृत्युंजयस्तोत्र-इसके पाठसे रोग दूर होतेहैं ... ... ... ... | ०-१-६ |
| पांडवगीतामूल ... ... .... .... | ०-२-० |
| पांडवगीता-भाषाटीकासमेत ... ... | ०-३-० |
| आदित्यहृदय छोटाअक्षर- ... ... ... | ०-१-० |
| तथा भाषाटीका ... ... ... ... | ०-३-० |
| रकारादिश्रीरामसहस्रनाम ( ब्रह्मयामलोक्त ) | ०-३-० |
| मकारादिश्रीरामसहस्रनाम ( रुद्रयामलोक्त ) | ०-३-० |
| " तथा दोनों पुस्तकोंका एक गुटका ... | ०-६-० |
| विधानसंग्रह-जिसमें अक्षरमृत्युञ्जय, मृत्युञ्जय-कवच, अम्बकमृत्युञ्जय विधान, महामृत्युविधान, पुत्रकामेष्टिप्रयोग, अभिलाषाष्टक-स्तोत्र, मंगलव्रतविधि और सभाष्य श्रीसूक्तविधान ये अत्युपयोगी विषय निरूपितहैं। ... ... ... ... ... | ०-६-० |

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri



| नाम. | की. रु. आ. पै. |
|---|---|
| पंचगीत-( गोपीगीत, वेणुगीत, भ्रमरगीत, श्रुतिगीत, अवधूतगीत ) ... ... ... | ०--३--० |
| गोपालसहस्रनाम-राधास्तोत्रंच १६ पेजी सादा | ०--२--० |
| गोपालसहस्रनाम-बड़ाअक्षर खुला पत्रा ... | ०--४--० |
| गोपालसहस्रनाम-गुटका रेशमी बडा अक्षर | ०--५--० |
| गोपाल सहस्रनाम-भाषाटीकासहित ... ... | ०--७--० |
| शिवसहस्रनाम मूल ... ... ... ... | ०--१--६ |
| शिवसहस्रनाम-भाषाटीका ... ... ... | ०--४--० |
| शिवसहस्रनाम स्तोत्र-सटीक... ... ... | ०--४--० |
| पुष्पांजलिस्तोत्र ... ... ... ... | ०--०--९ |
| सीतासहस्रनाम-भाषाटीका ... ... ... | ०--२--० |
| भवानीसहस्रनाम ... ... ... ... | ०--४--० |
| स्तोत्ररत्नमाला-भाषाटीकासहिता-इसमें भक्ति ज्ञान तथा उपासनाके ८९ अपूर्वोत्तमस्तोत्र चुन २ कर संग्रहकिये हैं ... ... ... | १--८--० |
| वेंकटेशसहस्रनाम-मोटा .... ... ... | ०--४--० |
| कालिकासहस्रनाम ... ... ... ... | ०--४--० |
| ककारादिकृष्णसहस्रनाम-रेशमी गुटका ... | ०--८--० |
| तुलसीसहस्रनाम ... ... ... ... | ०--१--६ |

पुस्तक मिलनेका ठिकाना-
खेमराज श्रीकृष्णदास "श्रीवेङ्कटेश्वर" स्टीम् प्रेस-बम्बई.

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

## अत्रेयमभ्यर्थना.



अत्रास्माकं मुद्रणालये ऋग्वेदादयो वेदा उपनिषदो वेदान्तग्रन्था महाभारतादीतिहासाः श्रीमद्भागवतादि महापुराणोपपुराणानि धर्मशास्त्र–कर्मकाण्ड–व्याकरण–न्याय–योग–सांख्य–मीमांसादि शास्त्रीयग्रन्थाः काव्य–नाटक–चम्पू–प्रभृतयो ग्रन्थाः सहस्रनामाद्यनेकस्तोत्रग्रन्थाश्च विविधभाषाग्रन्थाश्च सीसकोत्तममहल्लघ्वक्षरैर्मनोहरं मुद्रिता आसते योग्यमूल्येन क्रय्याः सन्ति, तांश्च ग्राहका यथापुस्तकसूचीपत्रं मूल्यप्रेषणेन प्राप्नुयुः ।

☞ अधिकमस्मदीयसूचीपुस्तकानां भिन्नभिन्नविषयाणां प्रापणेन 'श्रीवेङ्कटेश्वरसमाचार' पत्रिकाप्रापणद्वारा च ज्ञेयमिति शम् ।




**खेमराज श्रीकृष्णदास,**
**"श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणालयाध्यक्षः,**
**मुंबई.**

KHEMRAJ SHRIKRISHNADAS,
Shri Venkateshwar Steam Press,
**BOMBAY.**